बिना श्रोता के असम्बद्ध वचन बोलती थी। असत्यकण्ठार्पितबाहुबन्धना—न सत्यः असत्यः (अविद्यमानः) असत्ये कण्ठे अर्पितम् (दत्तम्) बाह्वोः बन्धनम् यस्याः सा:—एक काल्पनिक (व्यक्ति के) गले में बाहुयें डालने वाली। यद्यपि उस समय पार्वती के पास कोई आदमी नहीं था फिर भी वह इस प्रकार बातें करती थी मानों कि कोई व्यक्ति उसके पास विद्यमान है और वह उस काल्पनिक व्यक्ति के गले में हाथ डालने को उत्सुक हो जाती थी व्यबुध्यत—(वि+बुध्+लङ्) जाग जाती थी। साहित्यदर्पण में यह श्लोक प्रलाप के उदाहरण में उद्धृत किया गया है। (अलक्ष्य वाक् प्रलापो स्यात् चेतसो भ्रमणाद् भृशम्) मल्लिनाथ इसे जागर तथा (नींद का न आना) और उन्माद (पागलपन जिसमें असम्बद्ध शब्द कहे जाते हैं) कहते हैं।

**Change of Voice** :—(किं) च, त्रिभागशेषासु निशासु क्षणम् नेत्रे निमील्य सहसा हे नीलकण्ठ! (त्वया) क व्रज्यते, इति अलक्ष्यवाचा असत्यकण्ठार्पितबाहुबन्धनया (अनया) व्यबुध्यत॥ ५७॥

**Hindi Translation** :—और, रात्रि के तीसरे (या चौथे) भाग के शेष रह जाने पर, मुहूर्त्तमात्र के लिये आँखों को बन्द करके (अर्थात् सोकर) अकस्मात् 'हे नीलकण्ठ (शिव)! कहाँ जाते हो?' इस प्रकार असंगत वाणी बोलती हुई (तथा) एक काल्पनिक गले में ही अपने बाहुओं को लपेटती हुई जग पड़ती थी॥ ५७॥

**English Translation**:—Moreover, at night, when its third (or fourth) part only remained, she, having closed her eyes for a moment, all of a sudden woke up with cries without a listener such as 'Othou of blue neck, where dost thou go?, (and) having her arms thrown tight round an imaginary neck. 57.

**Purport in Sanskrit** :—शिवेऽत्यन्तमनुरक्ता पार्वती दिवानिशम् तमेव ध्यायन्ती रात्रावपि गाढ़निद्रामलभमाना स्वल्पशयनानन्तरमेव अकस्मादेव विबुध्यते स्म, उन्मादाभिभूता चाविद्यमानमपि शिवम् लक्ष्यीकृत्य 'हे शिव ! त्वम् कुत्र गच्छसि ? किमर्थम्मत्समीपम् नायासि ? इत्यादिकमालपन्ती काल्पनिकम् शिवमालिङ्गितुञ्च तस्य ग्रीवाम् परितः स्वबाहू प्रसारयति स्म ॥ ५७ ॥

यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥

स्वप्न सादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणो विनोदाः । तत्र स्वप्नसंदर्शनमुक्त्वा प्रकृतिदर्शनमाह-यदेति । यदा यत इत्यर्थः । 'यदेति हेतौ' इत्युक्त्वा गणव्याख्यानेऽस्योदाहृतत्वात् त्वम् बुधैः मनीषिभिः सर्वगतः सर्वव्यापीति उच्यसे । तत इत्यध्याहारः भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागणामित्यर्थः । इमम् जनम् । इममित्यात्मनिर्देशः । कथम् न वेत्सि न जानासि । इति मुग्धया मूढया । अकिञ्चित्करश्चित्रगतोपालम्भ इत्यजानानयेत्यर्थः । तया स्वहस्तोल्लिखितः स्वहस्तेनोल्लिखितश्चित्रे लिखितः चन्द्रशेखरः रहसि एकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेपमुक्तः च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव ॥ ॥

**Prose Order** :—यदा त्वम् बुधैः सर्वगतः उच्यसे ( ततः ) भावस्थम् इमम् जनम् कथम् न वेत्सि ? इति मुग्धया (अनया) स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि उपालभ्यत ॥ ५८ ॥

टिप्पणीः—यदा—जब । कहीं कहीं पर सदा पाठ है । बुधैः—( बुध+कः ) पण्डितै; पण्डितों द्वारा । सर्वगतः सर्वम् गतः ( प्राप्तः ) सर्वगतः ( सर्वान्तर्यामी ) सब कुछ जानने वाला सर्वगत; सर्वत्र

रहने वाला। इसमें द्वितीया तत्पुरुष समास है। "इसका सूत्र हैं द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" पा० २. १. २४। उच्यसे—कथ्यसे। कहे जाते हो। वच् धातु कर्म वाच्य म. पु. ए. व.। भावस्थम् (त्वदनुरागिणम्) जो तुमसे प्रेम करता है। "सुपिस्थः" पा० ३. २. ४ से कः प्रत्यय लगा। यह उपपद समास है। इमम् जनम्—पार्वती। मुग्धया—(मुह+क्त) ह का घ, तव ग् तव त तव ध हो जाता है। मुग्धम् बेवकूफ सीधी सादी पार्वती को ठीक ही मुग्ध कहा गया हैं क्योंकि प्रेमासक्त होने के कारण उनको यह न मालूम पड़ा कि चित्र से बात चीत करना व्यर्थ है। अलंकार की पुस्तकों में मुग्धा एक प्रकार की नायिका कही गई है। स्वहस्तोल्लिखितः। उल्लिखितः—( उत्+लिख्+क्त ) चित्रितः चित्रवना कर। स्वेन-हस्तेन उल्लिखितः स्वहस्तोल्लिखितः अपने हाथों से खींचा गया चन्द्रशेखरः चन्द्रः शेखरो यस्य या चन्द्रः शेखरे यस्य सः चन्द्रशेखरः चन्द्रमा है शिरमें जिसके शंकर जी। रहसि एकान्ते अकेले में एकान्त में उपालभ्यत—( उप+लभ्+य+लङ् ) अधिक्षिप्यते स्म उलाहना दिया; उप्+आ के साथ "लभ्माने उलाहना देने के होते हैं।

प्रिय के चित्र का खींचना उन चार उपायों में एक है जिससे कि वियोगि प्रेमिकायें अपनी इच्छा की पूर्ति करती हैं। और तीन-तरीके ये हैं—स्वप्नदर्शन, सादृश्यदर्शन, और तदङ्गस्पृष्टस्पर्श "वियोगावस्थासु प्रियजनसदृशानुभवनम् ततश्चित्रम् कर्म स्वप्नसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवताम् स्पर्शनमपि प्रतीकारः काम-व्यथित मनसाम् कोऽपि कथितः" यहाँ पर प्रेमी की दशों अवस्थाओं में ही त्याग अवस्था है।

**Change of Voice** :—यदा त्वाम् बुधाः सर्वगतम् ब्रुवन्ति ( ततः ) भावस्थः अयम् जनः ( त्वया ) कथम् न वेद्यते ? इति मुग्धा ( सा ) स्वहस्तोल्लिखितं चन्द्रशेखरं रहसि उपालभत ॥ ५८ ॥

**Hindi Translation** :—'जब कि ज्ञानी लोग तुम्हें सर्व-

व्यापक बताते हैं तो अपने प्रेमी इस व्यक्ति को तुम क्यों नहीं जानते ?' इस प्रकार वह ( प्रेम में ) भोली ( पार्वती ) अपने हाथ से चित्रित महादेव को एकान्त में उलाहना देती थी ॥ ५८ ॥

**English Translation :**—"When thou art declared to be all pervading by the wise, how dost thou not know this person in love with you ?" thus was the moon-crested ( Shiva ), drawn with her own hand, upbraided in private by this foolish girl. 58.

**Purport in Sanskrit :**—निजमनोविनोदार्थम् पार्वती स्वप्रियस्य शिवस्य चित्रमुल्लिख्य तेन सह नानाप्रकारेण वार्त्तालापम् विदधत्यकथयत्—'यत् हे शिव ! विद्वांसो जनास्त्वां सर्वव्यापकं कथयन्ति, तर्हि त्वं मम हृदये विद्यमानोऽपि स्वविषयकं मेऽनुरागं कथं न जानासि ?' ॥ ५८ ॥

यदा च तस्याधिगमे जगत्पते—
रपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरो—
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

यदेति । जगत्पतेः तस्य ईश्वरस्य अधिगमे प्राप्तौ अन्यम् विधिम् उपायम् विचिन्वती मृगयमाणा यदा न अपश्यत् यदा इयम् पार्वती गुरोः पितुः अनुज्ञया अस्माभिः सह तपसे तपश्चरितुम् तपोवनम् प्रपन्ना प्राप्ता च ॥ ५९ ॥

**Prose Order :**—( अथ ) च जगत्पतेः तस्य अधिगमे विचिन्वती यदा अन्यं विधिं न अपश्यत्, तदा गुरोः अनुज्ञया अस्माभिः सह तपसे तपोवनं प्रपन्ना ॥ ५९ ॥

टिप्पणी:—जगत्पतेः जगतां संसारस्यपतिः जगत्पतिः तस्य जगत्पतेः संसार के स्वामी का जब किसी के साथ पति शब्द का

समास हो जाता है तो उसका रूप हरि के समान चलता है। अतः जगत्पतेः रूप हुआ नकि जगत्पत्युः अधिगमे—( अधि+गम्+अप् ) प्राप्तौ पाने में। अधि पूर्वक गम् के अर्थ पाने के होते हैं। विचिन्वती—( वि+चिञ्+शतृ+ङीप् ) मृगयमाणा खोजती हुई। सोचती हुई। विधिम् उपायम्—साधन। विधि पुंलिङ्ग है गुरोः पितुः पिता का। "गुरूः गोष्पति पित्राद्यौ" इत्यमरः। अनुज्ञया—आज्ञया आज्ञा से। तपसे तपः कर्तुम् तपस्या करने के वास्ते। तुमुन् के अर्थ में चतुर्थी हुई है। श्लोक ३३ देखिये। प्रपन्ना—( प्र+पद्+क्त ) प्राप्ता आगता आई।

**Change of Voice :**—( अथ ) च जगत्पतेः तस्य अधिगमे विचिन्वत्या ( तया ) यदा अन्यः विधिः न अदृश्यत, तदा गुरोः अनुज्ञया (अनया) अस्माभिः सह तपसे तपोवनम् प्रपन्नम् ॥ ५६ ॥

**Hindi Translation :**—फिर, जब संसार के स्वामी ( शिव ) की प्राप्ति के लिये खोज करती हुई ( उसने ) कोई दूसरा उपाय न देखा, तब पिता जी की आज्ञा लेकर तप करने के लिये हमारे साथ इस तपोवन में आ गयो ॥ ५६ ॥

**English Translation :**—At last, when she searching hard to obtain the Lord of the worlds could find no other way, (she) with the permission of her father came with us to this penance forest for practising penance. 59.

**Purport in Sanskrit :**—संसारस्वामिनः शिवस्य प्राप्त्यर्थम् सा नानाविधानुपायानकरोत् परम् सर्वेपूपायेषु विफलेषु सत्सु 'सर्वमपि तपसाधिगम्यम्' इति विचारयन्ती पार्वती पितुराज्ञामादाय स्वसखीभिरस्माभिः सार्धम् तप आचरितुमिदम् तपोवनमागता ॥ ५६ ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि।

न च प्ररोहाभिमुखोऽपि दृश्यते

मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥

द्रुमेष्विति । सख्या पार्वत्या स्वयं कृतजन्मसु कृतम् जन्म येषाम् तेषु । स्वयं रोपितेष्वित्यर्थः । तपःसाक्षिषु तपसः साक्षिषु साक्षात् द्रष्टेषु एषु द्रुमेषु अपि फलम् दृष्टम् लब्धम् ! जनितमित्यर्थः । अस्याः पार्वत्याः च शशिमौलिसंश्रयः चन्द्रशेखरविषयः मनोरथः तु प्ररोहाभिमुखः अङ्कुरोन्मुखः अपि न दृश्यते । प्ररोहस्त्वङ्कुरः' इति बैजयन्ती । स्वयम् रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥ ६० ॥

**Prose Order:** सख्या स्वयम् कृतजन्मसु तपःसाक्षिषु एषु द्रुमेषु अपि, फलम् दृष्टम् शशिमौलिसंश्रयः अस्याः मनोरथः च प्ररोहाभिमुखः अपि न दृश्यते ॥ ६० ॥

टिप्पणी :—सख्या-सखी ( पार्वती ) द्वारा । कृतजन्मसु कृतम् जन्म येषां ते तेषु जो उसके द्वारा लगाये गये थे; जिन पौधों को उसने लगाया था । तपः साक्षिषु—तपसः साक्षिषु जो उसकी तपस्या के साक्षी थे । साक्षिन् पर टिप्पणी के लिये तपः साक्ष्ये ( श्लोक २५ ) की टिप्पणी देखिये । वृक्ष पार्वती की तपस्या के साक्षी कहे गये हैं क्योंकि जब पार्वती वन में तपस्या करने आई थीं तब वे वृक्ष इससे लगाये गये थे और दिन रात जब वह तपस्या करती थीं वे उसके पास रहकर उसकी तपस्या को देखा करते थे। शशिमौलिसंश्रयः—शशिमौलिः—शशः अस्यास्तीति शशी ( शस+इनिः) चन्द्रः शशी मौलौ ( मस्तके ) यस्य सः अथवा शशी मौलिः ( शेखरः ) यस्य सः शशिमौलिः-शिव । मौलि शिर; चोटी । संश्रयः—( सम्+श्री+अच् ) संश्रीयते इति संश्रयः ( अवलम्बः ) सहारा। शशिमौलि संश्रयः—शशिमौलिः संश्रयो यस्य सः शशिमौलिसंश्रयः—शिवसंबंधी । मनोरथः अभिलाषः इच्छा; मनोरथ । ( शिव को पाने की इच्छा ) प्ररोहाभिमुखः—प्ररोहः ( प्र+रुह्+घञ् ) प्ररोहतीति

प्ररोहः ( अङ्कुरः ); अंखुआ। "प्ररोहस्त्वङ्कुरः" इति वैजयन्ती कोशः। प्ररोहस्य अभिमुखः प्ररोहाभिमुखः—अङ्कुरित होने वाला न दृश्यते नहीं दिखाई पड़ता। यद्यपि इसके लगाये हुये वृक्षों में फल लग गये परन्तु इसका मनोरथ अभी अङ्कुरित होने वाला नहीं दिखाई पड़ता। पार्वती की इच्छा में तथा उसके लगाये वृक्षों में जो अन्तर है वह कितना सुन्दर है।

**Change of Voice :**—सख्या स्वयम् कृतजन्मसु तपःसाक्षिषु एषु द्रुमेषु अपि (वयम्) फलम् दृष्टवत्यः, (परम्) शशिमौलिसंश्रयम् अस्याः मनोरथम् च प्ररोहाभिमुखम् अपि न पश्यामः ॥ ६० ॥

**Hindi Translation :**—हमारी सहेली द्वारा अपने आप लगाये हुए, तप के साक्षीभूत इन वृक्षों में भी फल लग गये, (परन्तु) शिव सम्बन्धी इसकी इच्छा अभी अङ्कुरित होनेवाली भी नहीं दीखती ॥ ६० ॥

**English Translation :**—Fruits have been seen euen on these trees which were planted by our friend herself and which have been the witnesses of her austerities, but the longing of her heart, which has for its basis the moon-crested God, does not seem even about to sprout. 60.

**Purport in Sanskrit :**—तपश्चरन्त्याः अस्याः पार्वत्याः दीर्घः कालो जातः। अत्रागत्य चानया स्वहस्तेनैव ये वृक्षा आरोपितास्ते फलिताः दृश्यन्ते परमेतावत्तपस्याचरणानन्तरमपि शिवसम्बन्धिनी अस्याः भावना लेशमात्रमपि साफल्योन्मुखी न दृश्यते ॥ ६१ ॥

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम्।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

नेति । प्रार्थितः सन्दुर्लभः प्रार्थितदुर्लभः स देवः तपःकृशाम् तपसा कृशाम् क्षीणाम् अतएव सखीभिः अस्रोत्तरम् अश्रु प्रधानम् यथा भवति तथा ईक्षिताम् इमाम् नः सखीम् तदवग्रहक्षताम् तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षताम् पीडिताम् । 'वृष्टिर्वर्षम् तद्विघातेऽवग्राहावग्रहो समौ इत्यमरः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यमरः । सीताम् कृष्टभुवम् । 'सीता लाङ्गलपद्धति' इत्यमरः । वृषा वासवः इव । वासवो 'वृत्रहा वृषा' इत्यमरः । कदा अभ्युपपत्स्यते कदा अनुग्रहीष्यति न वेद्मि । अत्र वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्नम् पदम् वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥ ६१ ॥

**Prose Order :**—प्रार्थितदुर्लभः सः तपःकृशाम् सखीभिः अस्रोत्तरम् ईक्षिताम् इमाम् सखीम् तदवग्रहक्षताम् सीताम् वृषा इव कदा अभ्युपपत्स्यते ( इति ) न वेद्मि ॥ ६१ ॥

टिप्पणी :—प्रार्थितदुर्लभः (प्र+अर्थ+क्त) (दूर्+लभ्+खल्) प्रार्थितश्चासौ दुर्लभश्च इति प्रार्थितदुर्लभः जो याचना करने पर कठिनाई से प्राप्त हो। यह "भविष्यति प्रार्थितदुर्लभः कथम्" का उत्तर है। स—शिवः । तपः कृशां तपसा कृशाः तपः कृशा ताम् तपः कृशाम् तपस्या से पतली दुबली; कृश—(कृश्+क्तः) अस्रोत्तरम्—अस्रम् (अश्रु) उत्तरम् प्रधानम् यस्मिन् कर्मणि तद् अस्रोत्तरम् या अस्रैः उत्तरम् यथास्यात्तथा अस्रोत्तरम्—आँसुओं के साथ। ईक्षिताम्—देखी गई। तदवग्रहक्षताम् अवग्रहः (अवग्रह्+अप्) वर्षप्रतिबन्धः—अकाल; सूखा पड़ना; पानी का न बरसना। "अवेग्रहो वर्ष प्रतिबन्धे" पा० ३. ३. ५१ से अप् प्रत्यय हुआ। दूसरा रूप अवग्राह है जो घञ् प्रत्यय लगाने से बनता है। तस्य (इन्द्रस्य) अवग्रहेणक्षताम् (पीडिताम) तदवग्रहक्षताम् उसके (इन्द्र) के पानी न बरसाने के कारण दुखी। मल्लिनाथ तद् न वेद्मि ऐसा अन्वय करते हैं। परन्तु यह अर्थ बहुत खींचकर लगता है। तद् समास का एक भाग है और इससे वृषन् का मतलब होता है।

सीताम्—लाङ्गलरेखाम्, कृष्टाम् भुवम् 'क्यारी जोती हुई जमीन।' सीतालाङ्गलरेखा स्याद् व्योमगङ्गा च जानकी"। वृषा—वर्षति इति वृषा—वृष्टि करने वाला, इन्द्र। "वासवोवृत्रहा वृषा" इत्यमरः। अभ्युपपत्स्यते अनुग्रहीष्यति कृपा करेंगे; अनुग्रह करेगा। (अभि+उप+पद्) कृपा करना; अनुग्रह करना इस श्लोक में शिव की उपमा इन्द्र से और पार्वती की उपमा पृथ्वी से दी गई है। जिस प्रकार वृष्टि न होने से पृथ्वी दुखी होती है उसी प्रकार शिव की कृपा न होने से पार्वती दुखी हो रही थी।

**Change of Voice:**—प्रार्थितदुर्लभेन तेन तपःकृशा सखीभिः अस्रोत्तरम् ईक्षिता इयम् सखी तदवग्रहक्षता सीता कृष्णा इव कदा अभ्युपपत्स्यत (इति) (मया) न वेद्यते ॥ ६१ ॥

**Hindi Translation** :—चाहे हुए होने पर भी कठिनता से मिलने वाला वह, तपस्या के कारण दुर्बल तथा सहेलियों से आँसुओं के साथ देखी हुई इस सहेली (पार्वती) के इन्द्र के द्वारा वर्षा के रोके जाने से दुखी, हल चली हुई पृथ्वी को इन्द्र की तरह कब अनुगृहीत करेगा। (यह) मैं नहीं जानती ॥ ६१ ॥

**English Translation** :—I do not know when he, difficult to be obtained though sought after, will favour this our friend emaciated with penance (and) looked at by her friends with tears, as Indra favours the ploughed earth distressed by his holding off the rain. 61.

**Purport in Sanskrit** :—सत्यमेवाभिलषितोऽपि शिवो दुष्प्रापः यतः स इयता समयेनापि पार्वत्या न लब्धः। तस्येमाम् चित्तवृत्तिम् दृष्ट्वा मया ज्ञातुम् न शक्यते यत् स कियत्कालानन्तरम् वर्षाभावादत्यन्तम् पीडिताम् महीम् इन्द्र इवेमाम् तपश्चरणात्कृशीभूतामस्माकम् सखीमनुग्रहीष्यति याम् दृष्ट्वा वयम् तत्सख्यो निरन्तरमश्रूणि मुञ्चामः ॥ ६१ ॥

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया ।
अपीदमेव परिहास इत्युमा-
मपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥

अगूढेति । इङ्गितज्ञया पार्वतीहृदयाभिज्ञया 'इङ्गितम् हृद्गतो भावः' इति सज्जनः । तया गौरीसख्या इति एवम् अगूढसद्भावम् प्रकाशितसदभिप्रायम् यथा तथा निवेदितः ज्ञापितः नैष्ठिकसुन्दरः निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवनब्रह्मचारी सुन्दरो विलासी नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्वविवक्षायाम् विशेषणसमासः । किन्तु नैष्ठिकत्वविशेषणेन कामित्वनिरोधः । अथवा देवस्यालौकिकमहिमत्वादुभयम् तात्त्विकमिति न विरोधः । अव्यञ्जितहर्षलक्षणम् अव्यञ्जितम् हर्षलक्षणम् मुखरागादि हर्षलिङ्गम् यस्य तथाभूतः सन् । आर्ये गौरि । अयीति कोमलामन्त्रणे । इदम् त्वत्सखीभाषितम् एवम् । सत्यम् किमित्यर्थः । परिहासः केलिर्वा । द्रवकेलिपरीहासाः इत्यमरः । इति एवम् उमाम् अपृच्छत् पृष्टवान् ॥ ६२ ॥

**Prose Order** :—इङ्गितज्ञया तया इति अगूढसद्भावम् निवेदितः नैष्ठिकसुन्दरः अव्यञ्जितहर्षलक्षणः ( सन् ) अयि ! इदम् एवम् ( अथवा ) परिहास इति इमाम् अपृच्छत् ॥ ६२ ॥

टिप्पणी :—इङ्गितज्ञया—( इङ्गित+ज्ञा+कः+आ ) इङ्गितम् ( हृद्गतम् भावम् ) जानाति इति इङ्गितज्ञा तया इङ्गितज्ञया—आन्तरिक भाव को जानने वाली । इङ्गित का अर्थ संकेत भी होता है परन्तु यहाँ पर "अन्तर का भाव" अर्थ है । 'इङ्गितो हृद्गतो भावः' इति सज्जनः । तया—पार्वती की उस सहेली से । अगूढसद्भावम—( गुह + क्त = गूढ ) सन् भावः सद्भावः न गूढः सद्भावः ( यथार्थाभिप्रायः ) यस्मिन् कर्मणि यथा स्यात्तथा । अगूढ सद्भावम् । निवेदितः का यह विशेषण है । अगूढसद्भावम्—

सुन्दर अभिप्राय को न छिपाते हुये। निवेदितः—उक्तः कहा गया। नैष्ठिक सुन्दरः—( निष्ठा+ठञ्+इक ) निष्ठा ( मरणम् ) तत्पर्यन्तम् ब्रह्मचर्येण तिष्ठति इति नैष्ठिकः ( यावज्जीवन ब्रह्मचारी ) या निष्ठाकालम् यावदस्य ब्रह्मचर्यमिति नैष्ठिकः ( यावज्जीवन ब्रह्मचारी ) जो जन्मपर्यन्त ब्रह्मचर्य व्रत धारण करता है। निष्ठा का अर्थ है अन्त, अन्तिम अवस्था मौत। 'निष्ठानिष्पत्तिनाशान्ताः इत्यमरः। 'तदस्य ब्रह्मचर्यम्' पा० ५. १. ५७ से ठञ् प्रत्यय लगा। ठञ् का इक हो गया। नैष्ठिकश्चासौसुन्दरश्च नैष्ठिकसुन्दरः—सुन्दर ब्रह्मचारी शिव )। अव्यञ्जितहर्षलक्षणः—न व्यञ्जितम् ( प्रकटितम् ) हर्षस्य लक्षणम् ( चिन्हं ) येन सः अव्यञ्जितहर्षलक्षणः—जिसने खुशी का चिह्न न दिखाया। यद्यपि शिव को यह देखकर कि पार्वती उनको इतना प्रेम करती है बड़ी खुशी हुई फिर भी उन्होंने हर्ष के चिह्नों को प्रकट नहीं किया। एवम्—सत्य। क्या यह बात ऐसी ही है जैसा सखी कहती है। परिहासः—मजाक; ( परि+हस्+घञ् ) अपृच्छत् पूछा, प्रच्छ धातु के दो कर्म होते हैं। एक कर्म अपृच्छत् का "उमाम्" है और दूसरा कर्म "अपि इदम् एवम् ( उत ) परिहासः" है।

**Change of Voice :**—इङ्गितज्ञया तया इति अगूढमद्भावम् निवेदितेन नैष्ठिकसुन्दरेण अव्यञ्जितहर्षलक्षणेन अयि अनेन एवम् ( भूयते ) अथवा परिहासेन इति एवम् अपृच्छ्यत ॥ ६२ ॥

**Hindi Translation :**—( पार्वती के ) आन्तरिक भाव को जानने वाली उससे इस प्रकार ( पार्वती के ) श्रेष्ठ अभिप्राय को स्पष्ट करके कहे हुए उस सुन्दर आजन्म ब्रह्मचारी ने प्रसन्नता के चिह्नों को सूचित न करते हुए ही पार्वती से पूछा—क्यों जी, क्या यह ऐसा ही है अथवा हँसी है ? ॥ ६२ ॥

**English Translation :**—Thus informed by her, who knew the intentions of Parvati's heart, not hiding her noble thoughts, that handsome life-long Brahma-

charin, without betraying signs of delight, asked Uma whether it was so or a joke. 62,

**Purport in Sanskrit** :--पार्वत्यभिप्रायवेदिन्या तत्सख्या पार्वत्याः अनुरागविषये स्पष्टमुक्तः स्वरूपवान् स ब्रह्मचारी नितराम् हृष्टो जातः, परम् स्वहर्षम् निगूहन् स पार्वतीमपृच्छत्—तत्तत्संख्या कथितम् वृत्तम् सत्यमासीन् उताहो हास्यमात्रमेव ॥ ६२ ॥

अथाग्रहस्ते मुकुलीकृताङ्गुली
समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथंचिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥

अथेति । अथ अनन्तरम अद्रेः तनया पार्वती मुकुलीकृताङ्गुली संपुटीकृताङ्गुली । अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्' इति वामनः । तस्मिन् अग्रहस्ते स्फटिकाक्षमालिकाम् स्फटिकानाम् अक्षमालिकाम् समर्पयन्ती आमुञ्चती कथञ्चित् महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्वीकृतवान् । एतेन लज्जापरोधी' व्यज्यते । मिताक्षरम् परिमितवर्णम् यथा तथा अभाषत बभासे ॥ ६३ ॥

**Prose Order** :—अथ अद्रेः तनया मुकुलीकृताङ्गुली अग्रहस्ते स्फटिकाक्षमालिकाम् समर्पयन्ती चिरव्यवस्थापितवाक् कथञ्चिद् मिताक्षरम् अभाषत ॥ ६३ ॥

टिप्पणी :—अद्रेः पर्वतस्य; पहाड़ की 'अद्रिगोत्रगिरिग्रावाचल शैलशिलोच्चयाः' इत्यमरः । तनया—पुत्री; ( पार्वती ) । मुकुलीकृताङ्गुली—मुकुला कृताः—( मुकुल+च्विः+कृताः ) अमुकुलाः मुकुलाः कृताः इति मुकुलीकृताः ( संपुटीकृताः ) जो कलियों की तरह सटा हुआ ( जुड़ा हो ) हो, कली के रूपवाला । मुकुल—कली । जब कोई वस्तु या व्यक्ति उस वस्तु या व्यक्ति के समान बताया जाता है जो

वह वास्तव में नहीं है तब च्वि प्रत्यय लगता है। यहाँ पर यह बताया है कि उंगलियाँ जो वास्तव में कलियों के समान नहीं थी उस रूप में ( जोड़कर ) बनाई गई इस वास्ते च्वि प्रत्यय लगाकर मुकुली कृत बनाया गया। इसका सूत्र है" अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरिच्विः "पा० ५. ४५ च्वि के पहले के अ या आ को इ हो जाता है परन्तु अव्यय का अ या आ नहीं बदलता। इ और उ का दीर्घ हो जाता है ऋ का री हो जाता है। तब च्वि का लोप हो जाता है और कृ, भू , अस् धातुओं के कोई भी रूप ( तिङन्त या कृदन्त ) उस शब्द में जोड़ दिये जाते हैं। मुकुली कृताङ्गलौ—मुकुली कृताः अङ्गुलयो यस्य सः तस्मिन् जिसकी उंगलियाँ कली के समान जुड़ी थीं। अग्रहस्ते—अग्रश्चासौ हस्तश्च इति अग्रहस्तः तस्मिन्—हाथ के अग्रभाग में। यह कर्मधारय समास है। यहाँ पर अग्र और हस्त में अवयव और अवयवीभाव संबंध है। इस वास्ते यहाँ कर्मधारय समास है। देखिये "हस्ताग्र अग्रहस्तायाः गुणगुणिनोर्भेदाभेदात्" वामनः। या हस्तस्य अग्रे इति अग्रहस्ते। इस समास को राजदन्तादि वर्ग का अगर मान लें तो हस्त बजाय पूर्व पद के के उत्तर पद हो जायगा। स्फटिकाक्षमालिकाम्—स्फटिकानाम् स्फटिकनिर्मिता वा अक्षमालिका स्फटिकाक्षमालिका तां स्फटिक मणि की बनी हुई माला यहाँ पर अक्षमालिका का केवल माला अर्थ है। समर्पयन्ती—आमुञ्चती—पकड़ती हुई। (अर्प+णिच्+शतृ+ङीप्) चिरव्यवस्थापित् वाक्चिरेण व्यवस्थापिता वाक् यया सा चिरव्यवस्थापितवाक्—बहुत देर तक वचनों को सोच कर; क्या कहना चाहिये क्या न कहना चाहिये इस बात को खूब देर तक सोचकर। कथञ्चित्—किसी प्रकार। पार्वती बहुत शर्मिन्दा हो रही थी इस वास्ते किसो प्रकार (बड़ा मुश्किल से) वे बोलीं। मिताक्षरम्—(मा + क्त = मितम्) मितानि अक्षराणि यस्मिन् कर्मणि यथा स्यात्तथा मिताक्षरम् थोड़े से शब्दों ( में ) अभाषत—बोली। ( भाष+लुङ् प्र. पु. ए. व० )

**Change of Voice** :—अथ अद्रेः तनयया मुकुलीकृताङ्गुलौ अग्रहस्ते स्फटिकाक्षमालिकाम् समर्पयन्त्या चिरव्यवस्थापितवाचा कथञ्चिद् मिताक्षरम् अभाष्यत ॥ ६३ ॥

**Hindi Translation** :—इसके अनन्तर पर्वत की पुत्री (पार्वती) स्फटिक की जपमाला को जुड़ी हुई (एकत्रीकृत) अंगुलियों वाले हाथ के अग्रभाग में पकड़ कर, देर तक वचनों को ठीक करके, जैसे तैसे, थोड़े से अक्षरों में बोली ॥ ६३ ॥

**English Translation** :—Then the daughter of the mountain (*i. e.* parvati), putting the crystal rosary into her forehand, of which the fingers had been drawn together in the shape of a bud, spoke with great difficulty, in measured words, having adjusted her speech (in her mind) for a long time, 63.

**Purport in Sasnkrit** :—ब्रह्मचारिणः प्रश्नानन्तरम् पार्वती स्फटिकनिर्मिताम् स्वजपमालाम् स्वजपमालाम् कुड्मलाकाराङ्गुलौ स्वहस्तस्याग्रभागे निश्चलीकृत्य—जपमालाचालनात्किञ्चित्कालम् विरम्य—चिराय कथनीयविषयम् कथनप्रकारञ्च निश्चित्य संक्षिप्तमुत्तरम् दातुमुद्यताभूत् ॥ ६३ ॥

यथा श्रुतं वेदविदां वर त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥

किमुवाचेत्याह यथेति । हे वेदविदाम् वर वैदिकश्रेष्ठ । त्वया यथाश्रुतम् सम्यक् श्रुतम् श्रुतार्थमेवाह—अयम् जनः स्वयमित्यर्थः । उच्चैः पदलङ्घनोत्सुकः उच्चैः पदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः । किमत्रायुक्तमित्यत्राह—इदम् तपः तदवाप्ति-

साधनम् किल । किलेत्यलीके । अतितुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा माम् न मुञ्चति इत्याशयेनाह—मनोरथानाम् कामानाम् अगतिः अविषयः न विद्यते । न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः ।।६४।।

**Prose Order :**—हे वेदविदाम् वर ! त्वया यथा श्रुतम् अयम् जनः उच्चैः पदलङ्घनोत्सुकः, इदम् तपः तदवाप्तिसाधनम् किल, मनोरथानाम् अगतिर्न विद्यते ।। ६४ ।।

टिप्पणी :—वेदविदाम्—( विद्—जानना + क्विप् = वित् ) वेदम् विदन्ति इति वेदविदः; तेषाम्—वेद जानने वालों का । इसका रूप यों चलेगा—वेदवित्, वेदविदौ, वेदविदः । आदि । वर—श्रेष्ठ; उत्तम । त्वया यथा श्रुतम्—जैसा आपने सुना है । या आपने ठीक सुना है त्वया—सम्यक् आकर्णितम् । मल्लिनाथ का कथन है कि यथा माने ठीक के हैं । इसका अर्थ ऐसे भी किया जा सकता है त्वया यथा श्रुतम् अयं जनः—जैसा आपने सुना है यह जन उच्च पद प्राप्त करने को उत्सुक है । या यथा के बाद तथा कर दें तो अर्थ हो जायगा कि जैसा आपने सुना है वह ठीक है । यथा श्रुतं तत्तथा । उच्चैः पदलङ्घनोत्सुकः—उच्चैः पदस्य स्थानस्य लङ्घने ( प्राप्तौ ) उत्सुकः—ऊँचे स्थान को पाने का उत्सुक । यह उच्च स्थान शिव की स्त्री बनना है । लङ्घन—पार करना या ऊपर उठना । तदवाप्तिसाधनम्—तस्य ( उच्चैः पदस्य ) अवाप्तेः ( प्राप्तेः ) साधनम् (उपायः) तदवाप्तिसाधनम् उसके प्राप्त करने का साधन । किल—निश्चय । परन्तु मल्लिनाथ इसका अर्थ करते हैं ( अलीके ) व्यर्थ । उनका कहने का अर्थ यह है कि तपस्या जो उसको प्राप्त करने का साधन है वह व्यर्थ प्रतीत होता है । अगतिः अवरोधः विश्रान्तिः—रुकावट; 'मनोरथानामगतिर्न विद्यते' यह एक सामान्य कथन है जिसका अर्थ है कि मनोरथ सब जगह पहुँच सकता है अर्थात् इच्छाओं की इति नहीं है प्राणी हर एक वस्तु की इच्छा कर सकता है ।

**Change of Voice :**—( हे ) वेदविदाम् वर ! त्वम् यथा

श्रुतवान् अनेन जनेन उच्चैः पदलङ्घनोत्सुकेन ( भूयते ) अनेन तपसा तदवाप्तिसाधनेन ( भूयते ) किल, मनोरथानाम् अगत्या न विद्यते ॥ ६४ ॥

**Hindi Translation :**—हे वेद के ज्ञाताओं में श्रेष्ठ ! तुमने जैसा सुना है ( वह ठीक है ), यह व्यक्ति ऊँचे पद की प्राप्ति का इच्छुक है; यह तपस्या उसकी प्राप्ति का उपाय है; इच्छाओं की विफलता नहीं होती है ॥ ६४ ॥

**English Translation :**—O one who is the best among those who know the Vedas, ( it is so ) as you have heard; this person is anxious to attain the high post. This penance is a means cf getting that; nothing is beyond the reach of desire. 64.

**Purport in Sankrit :**—वर्णिनः प्रश्नमाकर्ण्य पार्वती तम् प्रतिवदति—'वेदज्ञातॄणाम् श्रेष्ठ ! साधो ! त्वया मे सखीमुखात् यत्किञ्चिदप्याकर्णितम् तत् यथार्थमेव; अहम् सत्यमेव शिवप्राप्तिरूपमुच्चस्थानमधिगन्तुम कृतनिश्चया उन्मनाश्चास्मि । इयम् मे तपस्या निश्चयमेव तस्य मे मनोरथस्य पूर्त्यर्थम् विद्यते, मम कामना चावश्यम् सफला भविष्यति यतो मनोरथेन सर्वमपि लब्धुम् शक्यते ॥ ६४ ॥

अथाह वर्णी विदितो महेश्वर-<br>
स्तदर्थिनी त्वं पुनरेव वर्त्तसे ।<br>
अमङ्गलाभ्यासरतिं विचिन्त्य तं<br>
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५ ॥

अथेति । अथ वर्णी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः इत्यमरः । आह उवाचेत्यर्थः 'आहेति भूतार्थे लट् प्रयोगो भ्रान्तिमूलः' इत्याह वामनः । किमित्याह—महेश्वरः महादेवः विदितः । मया ज्ञायत

इत्यर्थः। बुद्ध्यर्थत्वात् वर्त्तमाने क्तः प्रत्ययः। तद्योगात् षष्ठी च। येन त्वम् प्रभग्नमनोरथा कृतेति भावः। पुनरेव त्वम् तमीश्वरमर्थयसे तदर्थिनी एव तत्कामैव वर्तसे। तत्प्रभावमनुभूयामीति भावः। अनुसरणे को दोषस्तत्राह—अमङ्गलाभ्यासरतिम् अमङ्गलाचारे रतिर्यस्य तम् तथोक्तम् तम् ईश्वरम् विचिन्त्य विचार्य तवानुवृत्ति अनुसरणम् कर्तुम् न उत्सहे च। नानुमन्तुम् शक्नोसीत्यर्थः ॥ ६५ ॥

**Prose Order** :—अथ वर्णी आह—महेश्वरः विदितः, त्वम् पुनः एव तदर्थिनी वर्तसे, च तम् अमङ्गलाभ्यासरतिं विचिन्त्य तव अनुवृत्तिम् कर्तुम् न उत्सहे ॥ ६५ ॥

टिप्पणी :—वर्णी ब्रह्मचारी। आह—उवाच बोला। ब्रू धातु के प्र. पु. लट् का ए. व० है। यह वर्तमान काल की क्रिया है इसको भूतकाल के अर्थ में न प्रयोग करना चाहिये। किन्तु कुछ लोगों का कहना है कि अथ के साथ आह का प्रयोग हो सकता है। 'तदादौच' (भोजसूत्रम्) इसी विषय के बल पर आह को भूत के अकाल के अर्थ में प्रयोग कर सकते हैं। वर्तमान काल के प्र. पु.. सब वचनों में और म. पु. के ए. व० द्वि. व० में ब्रू का आह हो जाता है। इसका सूत्र है "पञ्चानामादित आहो ब्रुवः" । पा० ३. ४. ८४। इसका ब्रू का दो रूप होगा ( केवल प्र. पु. के सब वचनों में और म. पु. के ए. व० द्वि. व० में ) आह आहतुः आहुः। आत्थ आहथुः ब्रूथ। या ब्रवीति ब्रूतः ब्रुवन्ति ब्रवीषि ब्रूथः ब्रूथ। ब्रवीमि ब्रूवः ब्रूमः। महेश्वरः ( महा+ईश्वरः ) महांश्चासौ ईश्वरः महेश्वरः शिव जब महत् शब्द किसी कर्मधारय या बहुव्रीहि का पूर्व पद होता है तो महान् को महत् हो जाता है। विदितः ज्ञातः मालूम है। ( विद्+क्त ) "मतिबुद्धिपूजार्थेभ्यश्च" पा० ३. २. १८८ से क्त प्रत्यय लगा। यह वर्तमान काल के अर्थ में लगा है। विदितः का कर्ता बना है। जो प्रकट नहीं है। ब्रह्मचारी ने कहा हाँ महादेव को हम जानते हैं। उसके कहने का अभिप्राय यह है कि महादेव वही हैं जिन्होंने कामदेव को जला दिया और पार्वती से ब्याह नहीं

करना चाहता । एव अपि भी । तदर्थिनी ( तत्+अर्थ+इनि+ङीप् ) अर्थः अस्यास्तीति अर्थिनी तस्य अर्थिनी तदर्थिनी ( तदभिलाषिणी ) उसको चाहने वाली । अमङ्गलाभ्यासरतिम् न मङ्गलम् अमङ्गलम् तस्य ( अशुभस्य ) अभ्यासे ( निरन्तर सेवने ) रतिः यस्य सः अमङ्गलाभ्यासरतिः तम् अशुभ वस्तुओं को सेवन करने वाला अशुभ वस्तुओं से प्रेम करने वाला । ( जैसे चिताभस्म मुण्डमाल, सर्पधारण करना ) देखिये आलेपो भसितम् विभूषितमहिर्वासः पितृणांवने, वेतालाः परिचारकाः प्रतिदिनम् वृत्तिश्च भिक्षामयी इत्थम् यस्य शुभेतराणि चरितान्याख्यान्ति सर्वेजनास्तस्मिन्मौग्ध्यवशान्मतिस्तव रुचिं बध्नाति किं ब्रूमहे पार्वतीपरिणय । अनुवृत्तिम्—अनुसरणम् अनुमोदनम् ; समर्थन करना न उत्सहे—हिम्मत नहीं करता । सह—वर्दाश्तकरना । परन्तु उत् उपसर्ग के साथ इसका अर्थ है सहन करना । ब्रह्मचारी के कहने का तात्पर्य यह है कि जब एक बार शिव ने जो अमङ्गल वस्तुओं का सेवन करते हैं पार्वती का अपमान किया तो वह इस बात से सहमत नहीं है कि पार्वती फिर भी उसी से ब्याह करने की इच्छा करे ।

**Chage of Voice** :—अथ, वर्णिना ( ऊचे )—( अहम् ) महेश्वरः विदितवान् , त्वया पुनरेव तदर्थिन्या वृत्यन्ते, च तम् अमङ्गलाभ्यासरतिं विचिन्त्य ( मया ) तव अनुवृत्तिः कर्तुम् न उत्सह्यते ॥ ६५ ॥

**Hindi Translation** :—तब ब्रह्मचारी बोला—महादेव को मैं जानता हूँ; तू फिर भी उसी के लिये इच्छा वाली है; ( मैं ) तो उसको अशुभ वस्तुओं से प्रेम करने वाला जान कर तुम्हारा अनुकरण करने ( अर्थात् तुम्हारी तरह सोचने ) का साहस नहीं कर सकता ॥ ६५ ॥

**English Translation:**—Then the ascetic said—Maheshwara is well-known, and yet thou hast a

longing for him, knowing him to possess fondness for the use of inauspicious things, I dare not see eye to eye with you. 65.

**Purport in Sanskrit :**—पार्वत्याः वचनमाकर्ण्य स ब्रह्मचारी कथयति—'अहम् शिवम् सम्यग्जानामि, अन्येऽपि च तं जानन्ति। तस्य चिताभस्मकपालाद्यशुभवस्तुषु प्रीतिर्विद्यते। तथापि त्वम् तत्प्राप्त्यर्थं तपोमग्ना तिष्ठसीत्याश्चर्यम्। अहम् शिवस्य यथार्थ्यम् विचार्य तव कार्यमनुमन्तुम् नोद्यतोऽस्मि ॥ ६६ ॥

अवस्तुनिर्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः।
करेण शंभोर्वलयीकृताहिना
सहिष्यते यत्प्रथमावलम्बनम् ॥ ६६ ॥

अवस्त्विति। अवस्तुनि तुच्छवस्तुनि निबन्धोऽभिनिवेशः परम् प्रधानम् यस्यास्तस्याः संबुद्धिः अवस्तुनिर्बन्धपरे पार्वति। आमुक्तविवाहकौतुकः आमुक्तमासञ्जितम् विवाहे यत्कौतुकम् हस्तसूत्रम् तद्यस्य सः ते अयम् करः। 'कौतुकम् मङ्गले हर्षे हस्तसूत्रे कूतूहले' इति शाश्वतः। वलयीकृताहिना भूषणीकृतसर्पेण शंभोः महादेवस्य करेण करणभूतेन तत्प्रथमावलम्बनम् तदेव प्रथमम् तत्प्रथमम्। अपरिचितत्वादतिभयंकरमिति भावः। तच्च तदवलम्बनमृग्रहणम् चेति कथं नु सहिष्यते। न कथंचिदपि सहिष्यते इत्यर्थः। अग्रतो यद्भावि तद्दूरेऽवतिष्ठताम् प्रथमम् करग्रह एव दुःसह इति भावः ॥ ६६ ॥

**Prose Order :**—( हे ) अवस्तुनिर्बन्धपरे। आमुक्तविवाह कौतुकः अयम् ते करः शंभोः वलयीकृताहिना करेण तत्प्रथमावलम्बनम् कथम् नु सहिष्यते ? ॥ ६६ ॥

टिप्पणी :—अवस्तुनिर्बन्धपरे न वस्तु अवस्तु ( तुच्छ वस्तु ) तस्मिन् निर्बन्धः ( आग्रहः ) परः ( प्रधानः ) यस्याः सा अवस्तु निर्बन्धपरा तस्याः सम्बोधने अवस्तुनिर्बंधपरे—तुच्छ वस्तु को चाहने

वाली। अवस्तु तुच्छपदार्थ—शिव । यहां पर अ अप्राशस्त्य के अर्थ में है, अप्राशस्त्य छः प्रकार का है तत्सादृश्यमभावश्च तदन्यत्वम् तदल्पता। अप्राशस्त्यम् विरोधश्च नञर्थाः षट् प्रकीर्तिताः। निर्बन्ध (किसी वस्तु के लिये) हठ । आमुक्तविवाहकौतुकः आमुक्तम् (धारितम्) विवाहस्य कौतुकं मङ्गलसूत्रम् यस्मिन् स आमुक्तविवाहकौतुकः जिसमें विवाह का मङ्गलसूत्र बंधा हो। "कौतुकं मङ्गले हर्षे हस्तसूत्रे कूतूहले।" इति शाश्वतः। विवाह तथा अन्य शुभ समय में पीले रंग से रंगा हुआ धागा कलाई में बांधा जाता है। शंभोः शिव के । वलयीकृताहिना—(वलय+च्वि+कृतः=वलयीकृतः) अवलयो वलयो यथा संपद्यते तथा कृतः वलयीकृतः (वलयरूपेण धृतः) वलयीकृतः अहिः (सर्पः) यस्मिन् स वलयीकृताहिः तेन वलयीकृताहिना—जिसमें सांप का कङ्कण हो; सांप का कङ्कण पहने हुये। शिव जी वासुकी नाग को कङ्कण के रूप में धारण करते हैं। वलय कङ्कण "आ वापकः परिहार्यः वलयोऽस्त्रियाम्" इत्यमरः च्वि के साथ वलयीकृता किस प्रकार बना इसके लिये श्लोक ६३ (मुकुलीकृत) की व्याख्या देखिये। तत्प्रथमावलम्बनम्—तदेव प्रथमम् तत्प्रथमम् तत्प्रथमम् च तदवलम्बनम् च (तत् ग्रहणम्) इति तत्प्रथमावलम्बनम्—पहली बार पकड़ना। कथं नु सहिष्यते—कैसे सहन करेगा । अर्थात् नहीं सहन कर सकता। "तस्योद्वाहन काले च हा हा कर्तुम् भविष्यति। फणि कङ्कण संयोगम् यदा ते कङ्कणम् भवेत्" शिवपुराणम्।

**Change of Voice :**—(हे) अवस्तुनिर्बंधपरे । आमुक्तविवाहकौतुकेन अनेन ते करेण शंभोः वलयीकृताहिना करेण तत्प्रथमावलम्बनम् कथम् नु सहिष्यते ॥ ६६ ॥

**Hindi Translation :**—हे तुच्छ वस्तु के पीछे पड़ी हुई (पार्वती) विवाह के धागे (कलावे) से युक्त यह तेरा हाथ जिसमें सांप कड़े की तरह पहना हुआ है ऐसे शिव के हाथ से पहले पहल पकड़ने को किस प्रकार सहन कर सकेगा ? ॥ ६६ ॥

**English Translation :**—O one who is intent on an unworthy object, how will this thy hand, with the marriage string tied round it, bear the first clasp of Shambhu's hand girdled with a serpent as with a bracelet ? 66.

**Purporti n Sanskrit :**—हे तुच्छपदार्थ आग्रहवति पार्वति। अशुभवस्तुधारी शिवः स्वहस्ते सर्पम् कङ्कणत्वेन धारयति, तस्मात् यदा स विवाहकाले मङ्गलसूत्रधारिणम् तव पाणिम् स्वकरेण ग्रहीष्यति तदा त्वम् तस्य करस्पर्शमसहमाना भीता त्वम् पाणिमपनेष्यसि येन पाणिग्रहणसंस्कारे एव विघ्नो भविता। एवम् 'प्रथमग्रास एव मक्षिकापातः' अन्यत्किमपि तु दूरे आस्ताम् ।। ६६ ।।

त्वमेव तावत्परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ।। ६७ ।।

त्वमेवेति—हे गौरि। त्वम् एव स्वयम् आत्मना। तावत् इति मानार्थो। यावन्मात्रम् विचारणीयम् तावन्मात्रमित्यर्थः। इदमेवोदाहृतम् च गणव्याख्याने। परिचिन्तय पर्यालोचय। किमिति। कलहंसलक्षणम् कलहंसचिह्नम्। 'चिह्नम् लक्ष्म च लक्षणम्' इत्यमरः। बध्वा नवोढाया दुकूलम् वधूदुकूलम्। 'वधू स्नुषा नवोढा स्त्री' इति विश्वः। तथा शोणितबिन्दुवर्षि शोणितबिन्दून्वर्षतीति यथोक्तम्। आर्द्रमित्यर्थः। गजाजिनम् च कृत्तिवासश्च। तत्पिनाकिन इत्याशयः। एते कदाचित् जात्वपि योगं संगतिम् अर्हतः यदि अर्हतः किम्। एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः। पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते। कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव स कथम् संघटिष्यत इति भावः ।। ६७ ।।

**Prose Order** :—( हे गौरि ) त्वमेव स्वयम् तावत् परिचिन्तय ( यत् ) कलहंसलक्षणम् वधुदुकूलम् शोणितबिन्दुवर्षि गजाजिनम् च—एते कदाचिद् योगम् अर्हतः यदि ॥ ६७ ॥

टिप्पणी :—तावत् तत् परिमाणमस्य तावत् ( तत्+वतुप् ) यावद्दाशक्यम् तावत्—अच्छी तरह पहले आ सर्वनाम्नः "पा० ६. ३. ६१ से तत् को ता हो गया। कलहंसलक्षणम्—कलहंसः लक्षणंयस्य तत् कलहंसलक्षणम् सुन्दर हंसों के चित्र से युक्त। "चिह्नम् लक्ष्म च लक्षणम्" इत्यमरः या कलहंसवत् लक्षणम् स्वरूपम् यस्य तत् कलहंसलक्षणम् जो सफेद हंस के समान हो। कलहंस हंसों की एक जाति विशेष होती है। "कादम्बः कलहंसः स्यात्" इत्यमरः। वधूदुकूलम्—वध्वाः दुकूलम् ( पट्ट वस्त्रम् ) नई विवाहिता बहू का रेशमी वस्त्र। वधू नई विवाहिता स्त्री। "वधूः स्नुषा नवोढा स्त्री" इति विश्वः। दुकूलम् रेशमी वस्त्र। शोणितबिन्दुवर्षि—(वर्ष+णिनि) शोणितस्यबिन्दून् वर्षतीति शोणितबिन्दुवर्षि खून की बूदों को टपकाता हुआ गजाजिनम् गजस्य अजिनम् ( चर्म ) गजाजिनम् हाथी की खाल। "अजिनम् कृतिः चर्म" इत्यमरः। पुराणों में ऐसी कथा प्रसिद्ध है कि गजासुर को मारने के बाद शिवजी उसकी खाल को ओढ़ कर नाचने लगे थे। कदाचित् कस्मिन्नपि काले किसी भी समय जरा सा भी। योगम् सङ्गतिम् साथ। ब्रह्मचारी के कहने का भाव यह है कि पार्वती तथा शिव के वस्त्र में जब इतना भेद है तो पार्वती को शिव के वास्ते तपस्या करना कहाँ तक ठीक है। अर्थात् ठीक नहीं है।

**Change of Voice** :—( हे गौरि ) त्वया एव स्वयम् तावत् परिचिन्त्यताम् ( यत् ) कलहंसलक्षणेन वधूदुकूलेन शोणितबिन्दुवर्षिणा गजाजिनेन च—एताभ्याम् कदाचित् योगः अर्ह्यते यदि ॥ ६७ ॥

**Hindi Translation** :—( हे गौरि ) तुम ही स्वयम् अच्छी तरह सोचो कि कहीं हंसों के चित्रों से युक्त नव विवाहिता बहू का

रेशमी वस्त्र और रक्त से सनी हुई ( महादेव की ) हाथी की खाल—ये दोनों कभी एक साथ रहने योग्य हैं ।। ६७ ।।

**English Translation :**—Do thou thyself think over sufficiently, if two things ever deserve to be brought together—fine garment of a newly married woman, with the figures of swans painted on it and (Shiva's) elephant-hide dripping blood drops. ? 67.

**Purport in Sanskrit :**—हे पार्वति, मे कथनमेकतः कृत्वा त्वमेव स्वयम् विचारय यत् विवाहसंस्कारे ग्रन्थिबन्धनकाले ते महार्हस्य हंसचित्रयुक्तस्य क्षौमवस्त्रस्य शिवस्य च रक्तबिन्दून् क्षरता हस्तिचर्मणा सह संयोगः ( ग्रन्थिबन्धनम् वा ) कथम् भविष्यति । तव तु महार्हम् पट्टवस्त्रम् शिवस्य च हस्तिनश्चर्म, तयोः संयोग एव नार्हति । युवयोर्वस्तुषु महान् भेदः इति तात्पर्यम् ।। ६७ ।।

चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयो-
र्विकीर्णकेशासु परेतभूमिषु ।। ६८

चतुष्केति । चतुष्कपुष्पप्रकरावकीर्णयोः चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रावकीर्णयोर्न्यस्तयोः कुसुमास्तृतदिव्यभवनभूसंचारोचितयोरित्यर्थः । तव पादयोः अलक्तकाङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि । पदं शब्दम् च वाक्ये च व्यवसायोपदेशयोः । पादतच्चिह्नयोः' इति विश्वः । विकीर्णाः विक्षिप्ताः केशाः शवशिरोरुहाः यासु तासु विकीर्णकेशासु । 'अतस्थम् तत्र दृष्टम् च' इति वचनात् 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीप् । परेतभूमिषु प्रेतभूमिषु । श्मशानेष्वित्यर्थः । परः अपि शत्रुरपि कः नाम अनुमन्यते । न कोऽपीत्यर्थः । नामेति कुत्सा-

याम्। पिनाकपाणिपाणिग्रहणे तस्य परेतभूसंचारित्वेन साहचर्यात्त्वापि तत्र संचारोऽवश्यम्भावीति भावः ॥ ६८ ॥

**Prose Order** :—परः अपि कः नाम चतुष्कपुष्पप्रकरावकीर्णयोः तव पादयोः अलक्तकाङ्कानि पदानि विकीर्णकेशासु परेतभूमिषु अनुमन्यते ? ६८ ॥

टिप्पणी :—परः शत्रु दुश्मन 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः। नाम्–यह शब्द कुत्सा अथवा निन्दा के भाव में आता है। चतुष्कपुष्पप्रकरावकीर्णयोः—चत्वारः अवयवा यस्य तत् चतुष्कम् ( चतुर+कन् ) चौकोर आंगन या बैठक। "संख्यायाः संज्ञासंघसूत्राध्ययनेषु" पा० ५. १. ५८ से कन् प्रत्यय लगाया गया। प्रकरः ( कृ+अप् ) समूह। अवकीर्ण—( अव+कृ+क्त ) बिखरा हुआ; रक्खा हुआ। चतुष्के गृह विशेषे पुष्पाणां प्रकरे अवकीर्णयो; यह पादयो. का विशेषण है। चौकोर आँगन में बिछाए हुये फूलों के ऊपर रक्खा हुआ ( पैर ) अर्थात् वह पैर जो कि चौकोर आँगन में विखरे हुये फूलों के ऊपर रक्खे जाते है। अलक्तकाङ्कानि अलक्तकः लाक्षारसः ( अङ्कः चिह्न ) येषु तानि। महावर लगे हुये पैर। स्त्रियां लाल रंग से पैरों को रंगती हैं। जिसे महावर कहते हैं। पदानिपदचिह्नानि—पैर के चिह्न। "पदशब्देच वाक्ये च व्यवसायापदेशयोः पादतच्चिह्नयोः "इति विश्वः। विकीर्ण केशासु (वि+कृ+क्त) विकीर्णाः के शाः यासुताः विकीर्णकेशाः तासु जिस पर बाल विखरे हैं। यह परेतभूमिषु का विशेषण है। परेतः ( परा+इ+क्त ) परलोकम् इतः गतः परेतः या परा। (दूरं) इतः इति प्रेतः—मुर्दा व्यक्ति। प्रेत (प्र+इ+क्त) परेतानांभूमिषु परेतभूमिषु—श्मशान घाट में। के अनुमन्यते—इसको कौन पसन्द करैगा। कहा जाता है कि शंकरजी श्मशान घाट में रहते हैं "वासः पितृणां वने"। अतः यदि पार्वती का व्याह उससे हो जायगा तो पार्वती को भी श्मशान भूमि पर चलना होगा। और इस फूलों के ऊपर चलने में और श्मशान भूमि पर चलने में बड़ा अन्तर है।

**Change of Voice :**—परेण अपि केन नाम चतुष्कपुष्पप्रकरावकीर्णयोः तव पादयोः अलक्तकाङ्कानि पदानि विकीर्णकेशासु परेतभूमिषु अनुमन्यते ? ॥६८॥

**Hindi Translaton:**—चतुष्कोण आँगन अथवा कमरों में ( बिखरे ) फलों पर पड़ने वाले तुम्हारे पैरों के लाक्षारस के चिह्नों को बनाने वाले पदचिह्नों के ( मुर्दों के ) बालों से युक्त श्मशानभूमि में पड़ने की अनुमति कोई शत्रु भी दे सकता है ? ॥६८॥

**English Translation :**—Who, even an enemy, wouid consent the foot-prints, leaving marks of red dye, of thy feet treading upon grounds of flowers (scattered) in quadrangular courtyard being placed upon cemetery grounds spread over with the hair ? 68

**Purport in Sanskrit :**—हे गौरि त्वं स्वपितुर्गृहे पुष्पास्तृतेषु प्रांगणादिषु भागेषु चलसि शिवश्च श्मशानवासी। तस्माद्विवाहानन्तरं तस्य वासस्थानं गत्वा लाक्षारसयुक्ताभ्यां पादाभ्यां मृतपुरुषाणां केशादिभिः संछन्नासु श्मशानभूमिषु ते संचलनम् कश्चिच्छत्रुरपि नानुज्ञास्यति मित्रस्य तु का कथा ? न त्वं श्मशानवासयोग्या; तत्र ते वासः शत्रूणामपि दुःखकारकः ॥ ६८ ॥

अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥६९॥

अयुक्तेति । त्रिनेत्रवक्षः त्र्यम्बकालिङ्गनमित्यर्थः । तव तत्सम्बन्धितया सुलभम् अपि सुप्रापं च । भवतीति शेषः । तवेति शेषे षष्ठी । 'न लोकाव्यय०—' इत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात् । अतः

परम् अस्मात्त्रिनेत्रवक्षोलाभादन्यद् अयुक्तरूपम् अत्यन्तायुक्तम् किं वद। नकिंचिदित्यर्थः। 'प्रशंसायां रूपम्' इति रूपप्प्रत्ययः। कुतः। यत् यस्मात्कारणात् हरिचन्दनास्पदे हरिचन्दनस्यास्पदे स्थानभूते अस्मिन् स्तनद्वये चिताभस्मरजः चिताभस्म श्मशानभस्म तदेव रजश्चूर्णम्। कर्तृ पदं करिष्यति पदं निधास्यति। भर्तुर्भवस्य भस्माङ्गरागादिति भावः॥ ६६।

**Prose Order** :—(त्वमेव) वद अतः परम् अयुक्तरूपं किं यत् त्रिनेत्रवक्षः सुलभं चिताभस्मरजः तव अपि हरिचन्दनास्पदे अस्मिन् स्तनद्वये पदं करिष्यति ?। ६६॥

टिप्पणीः—अतः परम्—इससे ज्यादा क्या। अयुक्तरूपम्—अतिशयेन युक्तं युक्तरूपम् तन्नभवति इति अयुक्तरूपम् अत्यन्तमनुचितम् या न युक्तम् अयुक्तम् अप्रशस्तम्। अयुक्तरूपम्—अत्यन्त अयोग्य। "प्रशंसायाम् रूपम्" पा० ५. ३. ६६ से प्रशंसा अर्थ में रूपम् शब्द जोड़ा गया। यहाँ पर अत्यन्त अनुपयुक्तता का बोध कराया जा रहा है। त्रिनेत्रवक्षःसुलभम्—त्रीणि नेत्राणि यस्य सः त्रिनेत्रः (शिवः) तस्य वक्षः त्रिनेत्रवक्षः तत्र सुलभम् त्रिनेत्रवक्षः सुलभम्. जो शंकरजी के वक्षःस्थल पर आसानी से प्राप्त (सुलभ) है। अथवा जो शङ्कर जी की छाती पर आसानी से मिल जाय। यह चिताभस्मरजः का विशेषण है। त्रिनेत्र के न का 'ण' नहीं हुआ क्योंकि इसका पाठ क्षुभ्नादि गण में है। "क्षुभ्नादिषु च" पा० ८. ४. ३६ से 'ण' नहीं हुआ। मल्लिनाथ ने इसका दूसरे ढंग से अर्थ लिया है। उनका कहना है—त्रिनेत्रवक्षः तव अपि सुलभम् अतः परम् अयुक्त रूपम् किम्। इससे बढ़कर क्या बुरी बात हो सकती है कि तुम चाहती हो कि त्रिनेत्र का वक्षस्थल तुमको सुगम हो। चिताभस्मरजः—चितायाः भस्म एव रजः चिता की राख (जिसको शङ्करजी अपनी छाती में लगाते हैं) हरिचन्दनास्पदे—हरेः विष्णोः इन्द्रस्य वा चन्दनम् हरिचन्दनम् तस्य आस्पदम् तस्मिन् हरिचन्दनास्पदे—चन्दन लगाने का स्थान। "हरिचन्दनमस्त्री स्यात् त्रिदशानां

महीरुहे । नपुंसकम् तु गोशीर्षे ज्योत्स्ना कुंकुमयो रपि" इति मेदिनी स्तनद्वये—स्तनयोः ( कुचयोः ) द्वयं ( युगलम् ) स्तनद्वयम् तस्मिन्-तुम्हारी छाती पर । पदम्—स्थान—जगह । मल्लिनाथ के अनुसार श्लोक के पिछले आवे का अर्थ इस प्रकार हो यत् हरिचन्दना-स्पदे अस्मिन् स्तनद्वये चिताभस्मरजः पदं करिष्यति—कि चन्दन लगाये जाने वाले तुम्हारे स्तनों पर चिता की भस्म लगाई जायगी ।

**Change of Voice** :—(त्वयैव) उच्यतां, अतः परम् अयुक्त-रूपं किम् यत् त्रिनेत्रवक्षस्सुलभेन चिताभस्मरजसां तव अपि हरि-चन्दनास्पदे अस्मिन् स्तनद्वये पदं करिष्यते ॥ ६९ ॥

**Hindi Translation** :—( तुम ही ) बताओ, इससे बढ़कर और अनुचित क्या हो सकता है कि तीन नेत्रों वाले ( शिवजी ) की छाती पर लगी हुई चिता की राख तुम्हारे भी इन दोनों स्तनों पर, जो चन्दन के स्थान हैं, जगह बना लेगी ॥ ६९ ॥

**English Translation** :—Say, what can be more improper than that the powder of the ashes of the funeral pyres, easy to be obtained from the bosom of the three eyed God, will make its home on the pair of thy breasts which have been a place for sandal paste. 69.

**Purport in Sanskrit** :—हे पार्वति ! महादेवः स्वशरीरे चितायाः भस्म लिम्पति । तस्मात् समागमकाले यदा स त्वामा-लिङ्गयिष्यति तदा चन्दनलेपयोग्यं ते वक्षो भस्मयुक्तं भविष्यति, यद्धि नितरामनुचितं प्रतिभाति ॥ ६९ ॥

इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्यया ।

विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥

इयमिति । इयम् च ते तव पुरतः आदावेव अन्या विडम्बना । परिहास इत्यर्थः । का सेत्यत्राह—ऊढ़या परिणीतया । वहेः कर्मणि क्तः । वारणराजहार्यया त्वया अधिष्ठितम् आरूढं वृद्धम् उक्षाणम् वृद्धोक्षम् । 'अचतुर'—इत्यादिना निपातः । विलोक्य महाजनः साधु-जनः स्मेरमुखः स्मितमुखः भविष्यति उपहसिष्यति । यत् इयमिति पूर्वेण सम्बन्धः । स्मेरेति, नमिकम्पिस्म्यज०'—इत्यादिना रप्रत्यय- ॥ ७० ॥

**Prose Order** :—( किम् ) च पुरतः इयम् अन्या ते विडम्बना यह ऊढया वारणराजहार्यया त्वया अधिष्ठितम् वृद्धोक्षं विलोक्य महाजनः स्मेरमुखः भविष्यति ॥ ७० ॥

टिप्पणीः—पुरतः—सर्वस्मात् पूर्वमेव सबसे पहले, पेश्तर इसके कि तुम शिव के यहाँ जाओ और उनके साथ रहो। पुर में तस् लगाने से पुरतः बना। यह अव्यय है। विडम्बना ( वि+डम्ब+युच् +आ) हास्य कारणम् मजाक; हँसी की बात। ऊढया (वह+क्त+ आ=ऊढा ) कृतविवाहया—व्याही गई हुई तुमसे । त्वया का विशे-षण है। वारणराजहार्यया--वारणानाम् हस्तिनाम् राजा वारणराजः तेन हर्तुम् योग्या नेतुम् योग्या वारणराजहार्या तया—हाथियों के राजा से ले जाये जाने योग्य। वह राजकुमारी थी अतः उसका हाथी ही पर चलना उचित था। वारणराज में "राजाहःसखिभ्यष्टच्" से राजन् को राज हो गया। हार्यया—हार्या का तृतीया का ए. व. है। हृ+ण्यत् । अधिष्ठितम्—बैठा हुआ ( अधि+स्था+क्त ) वृद्धो-क्षम्—वृद्धम् उक्षम् वृद्धोक्षम् या वृद्धश्चासौ उक्षा ( वृषभः ) वृद्धोक्षः तम् वृद्धोक्षम् बूढ़ा बैल। कर्मधारय समास के अन्त में उक्षन् का उक्ष होता है। "अचतुर...जाते महोक्षवृद्धोक्षोपशुनगोष्ठश्वाः "पा० ५. ४. ७७ " से 'अ' जोड़कर उक्षन् का उक्ष हो गया। महाजनः—

महाँश्चासौजनः महाजनः (सभ्यलोकः) सभ्यपुरुष। स्मेरमुखः स्मयते इति स्मेरः मुस्कुराता हुआ। 'नमिकम्पिस्म्यजसकमहिंसदीपो रः" पा० ३. २. १६७ से स्मिधातु में र जुड़ गया। स्मे (मन्दहास युक्तम्) मुखं यस्य सः स्मेरमुखः—मुस्कुराता हुआ मुँह।

**Change of Voice** :—(किम्) च पुरतः अनया अन्यया ते विडम्बनया (भूयते) यद् ऊढया वारणराजहार्यया त्वया अधिष्ठितम् वृद्धोक्षम् विलोक्य महाजनेन स्मेरमुखेन भविष्यते ॥ ७० ॥

**Hindi Translation** :—सबसे पहिले यह तुम्हारी और दूसरी हँसी होगी कि श्रेष्ठ हाथी पर चढ़ने योग्य, विवाहिता तुम को (शिव जी के) बुड्ढे बैल पर बैठे देखकर बड़े आदमी मुस्कराने लग जावेंगे। ॥ ७० ॥

**English Translation** :—Then, first of all, there will be another humiliation for thee when great men will have smiling countenances on seeing thee, fit to be borne by a lordly elephant, riding an old bull, after marriage 70

**Purport in Sanskrit** :—हे पार्वति! शिवस्य वाहनम् वृषभोऽस्ति, तस्माद्विवाहानन्तरम् यदा हस्तिराजवहनयोग्या त्वं तस्य वृद्धम् वृषमारुह्य तत्स्थानम् गमिष्यसि तदा सर्वेऽपि प्रेक्षकास्त्वाम् दृष्ट्वा हसिष्यन्ति ॥ ७० ॥

द्वयं गतं सम्प्रति शोचनीयताम्
समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥

द्वयमिति। पिनाकिनः ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया क्रियमाणयेति शेषः। सम्प्रति द्वयं शोचनीयताम् शोच्यत्वं गतम्। किं तदाह—सा प्रागेव हरशिरोगता। अत्र सेति प्रसिद्धार्थत्वान्न

यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थ-विषयस्तच्छब्दो यदुपादानम् नापेक्षते ।' इति । कान्तिमती । नित्य-योगे मतुप् । कलावतः चन्द्रस्य कला षोडशो भागः च । अस्य लोकस्य नेत्रकौमुदी । नेत्रानन्दिनीत्यर्थः । त्वं च । कान्तिमतीत्वनेत्रकौमु-दीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागेकैव शोच्या । संप्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रय-णादिति भावः ॥ ७१ ॥

**Prose Order** :—पिनाकिनः समागमप्रार्थनया सम्प्रति कला वतः सा कान्तिमती कला च अस्य लोकस्य नेत्रकौमुदी त्वं च द्वयं शोचनीयताम् गतम् ॥ ७१ ॥

टिप्पणी :—पिनाकिनः—पिनाक को धारण करने वाले (शिव) का । समागमप्रार्थनया—समागमस्य सहवासस्य प्रार्थना समागमप्रार्थना तया समागम की इच्छा से; साथ रहने की इच्छा से की प्रार्थना से । सम्प्रति-अधुना इस समय । कलावतः—( कला+मतुप्=कलावत् ) प्रशस्ताः प्रचुराः वा कलाः सन्ति अस्य इति कलावान् चन्द्रः; तस्य चन्द्रमा का । मतुप् के 'म' को व हो गया । इसका सूत्र है । "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" पा० ८. २. ९ सा प्रसिद्धा—वह; विख्यात । जिसे शिव अपने मस्तक पर धारण करते हैं । कान्तिमती ( कान्ति+मतुप्+ङीप् ) कान्तिः द्युतिः अस्याः अस्तीति कान्तिमती चमकने वाली ; कान्तियुक्त । कला का विशेषण है । त्वं का भी विशेषण है । नेत्रकौमुदी—चद्रप्रभा चन्द्रमा की रोशनी "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । इसका प्रयोग उसवस्तु के लिये भी होता है जो चन्द्रमा के प्रकाश के समान सुहावनी हो । नेत्रकौमुदी—नेत्रयोः, कौमुदी—लोगों के नेत्र के वास्ते कौमुदी के समान । सुन्दरी स्त्री को नेत्रकौमुदी कहते हैं क्योंकि वह नेत्रों को सुखप्रद होती है । देखिये "त्वं कौमुदी नयनयो ; अमृतम् त्वमङ्गे" उत्तररामचरितम् ३. २६. यह कला और त्वम् का विशेषण है । द्वयं—दो वस्तुयें । शोचनीयताम् ( शुच्+अनीय+तां ) शोक-

विषयताम्—शोकावस्था को। गतम् प्राप्तम्—हो गये हैं। काव्य प्रकाश में इस श्लोक में अक्रमत्व दोष दिखाया गया है। क्योंकि च लोकस्य के बाद रक्खा गया है न कि त्वं के बाद। च को त्वं के बाद रखना चाहिये था। क्योंकि कला के साथ त्वं का संबन्ध है न कि लोक का। ब्रह्मचारी के कहने का तात्पर्य यह है कि शिव जो मुण्डमाल धारण करते हैं वे पार्वती तथा चन्द्रिका ऐसी सुन्दर वस्तुयें प्राप्त करने योग्य नहीं है।

**Change of Voice** :—पिनाकिनः समागमप्रार्थनया सम्प्रति कलावतः तया कान्तिमत्या कलया अस्य लोकस्य नेत्रकौमुद्या त्वया च ( इति ) द्वयेन शोचनीयताम् गतेन ( अभावि ) ॥७१॥

**Hindi Translation** :—महादेव के साथ रहने की इच्छा से अब चन्द्रमा की वह चमकती हुई कला और इस संसार के नेत्रों की चन्द्रिका तू दोनों ही शोचनीय हो गयीं ॥ ७१ ॥

**English Translation** :—By (their) earnest desire for union with Shiva, two things have now become deplorable; that bright digit of the moon and thyself' who art the moonlight of the eyes of this world. 71.

**Purport in Sanskrit** :—हे गौरि ! मृतमुण्डधारी महादेवस्तु तादृशोऽमाङ्गलिको यत् शुभमपि वस्तु तत्संसर्गेण शोकविषयताम् याति। तथा हि—पूर्वस्मिन् काले तु तस्य मस्तके वासाच्चन्द्रमसः कला शोचनीयाऽभूत्, इदानीञ्च ज्योत्स्नेव सर्वजगतः नेत्राणामानन्ददकारिणी त्वम् तत्सहवासेच्छाम् कुर्वन्ती शोचनीया भविष्यसि किमतः परम् दुःखकरम् ? ॥ ७१ ॥

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने॥ ७२ ॥

कन्या मृगयते रूपम् माता वित्तम् पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः। इति लोकानामाभाषणम्। तत्र किञ्चिदपि नास्तीत्याह—वपुरिति। वपुः। तावदस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य तद् विरूपाक्षम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् प्रत्ययः। वैरूप्यम् च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्यवार्त्तापीत्यर्थः। अलक्ष्यमज्ञातम् जन्म यस्य तस्य भावस्तत्ता। कुलमपि न ज्ञायते इत्यर्थः। 'अलक्षिता जनिः' इति पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता। 'जनिरुत्पत्तिरुद्भवः' इत्यमरः। वसु वित्तम् दिगम्बरत्वेन एव निवेदितम्। नास्तीति ज्ञापितमित्यर्थः। यदि वित्तम् भवति तदा कथम् दिगम्बरो भवति। अतो ज्ञेयम् निर्धनोऽयमिति। किम् बहुना। हे बालमृगाक्षि पार्वति वरेषु वोढेषु। 'वरौ जामातृवोढारौ' इति विश्वः। यत् रूपवित्तादिकम् मृग्यते कन्यातद्बन्धुभिरन्विष्यते तम् त्रिलोचने त्र्यम्बके व्यस्तम् एकम् अपि। समस्तम् मा भूदिति भावः। अस्ति किम् नास्त्यर्थः ? ॥ ७२ ॥

**Prose Order** :—( अस्य ) वपुः विरूपाक्षम् अलक्ष्यजन्मता, वसु दिगम्बरत्वेन निवेदितम्। हे बालमृगाक्षि ! यद् वरेषु मृग्येत तत् त्रिलोचने व्यस्तम् अपि अस्ति किम् ? ॥७२॥

टिप्पणी :—वपुः—शरीरम्—शरीर। विरूपाक्षम्—( विरूप+अक्षि+षच् ) विरूपम् ( विकृतम् ) अक्षि नेत्रम् यस्य यस्मिन् वा तद् विरूपाक्षम्—विकृत आँख वाला। या विरूपाणि अक्षीणि यस्मिन् जिसमें विषम नेत्र हों शिव जी के तीन आँखें हैं उसी को विरूपाक्ष कहते हैं। अक्षि को अक्ष हो गया। इ निकाल कर अ जोड़ देने से अक्ष होता है बहुव्रीहि समास के अन्त में ऐसा किया जाता है। इसके लिये सूत्र है। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" पा० ५. ४१. १३. अलक्ष्यजन्मता—अलक्ष्यम् जन्म यस्य सः अलक्ष्यजन्मा तस्य भावः अलक्ष्यजन्मता। अज्ञातजन्म। वसु—धनम् धन। "रत्ने धने वसु" इत्यमरः। वसु—वसुनी वसूनि 'इत्यादि रूप

